॥ ध्रुवकृत भगवत् स्तवं ॥

**ध्रुव उवाच**

योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां
संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमो भगवते पुरुषाय तुभ्यं ॥ १ ॥

एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषं ।
सृष्ट्वाऽनुविश्य पुरुषस्तदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि ॥ २ ॥

त्वद्दत्तया वयुनयेदमचष्ट विश्वं
सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः ।
तस्यापवर्ग्यशरणं तव पादमूलं
विस्मर्यते कृतविदा कथमार्तबंधो ॥ ३ ॥

नूनं विमुष्टमतयस्तव मायया ते
ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चंति कल्पकतरुं कुणपोपभोग्यं
इच्छंति यत्स्पर्शजं निरयेऽपि नृणां ॥ ४ ॥

या निर्वृतिस्तनुभृतां तव पादपद्म
ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्
किं त्वंतकासिलुलितात्पततां विमानात् ॥ ५ ॥

भक्तिं मुहुः प्रवहतां त्वयि मे प्रसंगो
भूयादनंत महताममलाशयानां ।
येनांजसोल्बणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः ॥ ६ ॥

ते न स्मरंत्यतितरां प्रियमीश मर्त्यं
ये चांवदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविंद
सौगंध्यलुब्धहृदयेषु कृतप्रसंगाः ॥ ७ ॥

तिर्यङ्नगद्विजसरीसृपदेवदैत्य
मर्त्यादिभिः परिचितं सदसद्विशेषं ।
रूपं स्थविष्ठमज ते महदाद्यनेकं
नातः परं परम वेद्मि न यत्र वादः ॥८ ॥

कल्पांत एतदखिलं जठरेण गृह्णन्
शेते पुमान् स्वदृगनंतसखस्तदंके ।
यन्नाभिसिंधुरुहकांचनलोकपद्म
गर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ ९ ॥

त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितिमखंडितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥ १० ॥

यस्मिन् विरुद्धगतयो ह्यनिशं पतंति
विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनंतमाद्यं
आनंदमात्रमविकारमहं प्रपद्ये ॥ ११ ॥

सत्याऽऽशिषो हि भगवंस्तव पादपद्मं
आशीस्तथानुभजतः पुरुषार्थमूर्तेः ।
अप्येवमर्य भगवान् परिपाति दीनान्
वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥ १२ ॥

॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां चतुर्थस्कंधे नवमेऽध्याये श्री ध्रुवकृत भगवत्स्तवं संपूर्णं ॥